वान्वाध्योगोऽसिताद्वार्षगणादसितो वार्षगणो हरितात्कश्यपाद्धरितः कश्यपः शिल्पात्कश्यपाच्छिल्पः कश्यपः कश्यपान्नैध्रुवेः कश्यपो नैध्रुविर्वाचो वागम्भिण्या अम्भिण्यादित्यादादित्यानीमानि शुक्लानि यजूꣳषि वाजसनेयेन याज्ञवल्क्येनाऽऽख्यायन्ते ॥ ३ ॥ समानमा सांजीवीपुत्रात्सांजीवीपुत्रो माण्डूकायनेर्माण्डूकायनिर्माण्डव्यान्माण्डव्यः कौत्सात्कौत्सो माहित्थेर्माहित्थिर्वामकक्षायणाद्वामकक्षायणः शाण्डिल्याच्छाण्डिल्यो वात्स्याद्वात्स्यः कुश्रेः कुश्रिर्यज्ञवचसो राजस्तम्बायनाद्यज्ञवचा राजस्तम्बायनस्तुरात्कावषेयात्तुरः कावषेयः प्रजापतेः प्रजापतिर्ब्रह्मणो

---

वदधोमुखो नियताचार्यपूर्वक्रमो वंशः समानमा सांजीवीपुत्रात् । ब्रह्मणः प्रवचनाख्यस्य । तच्चैतद्ब्रह्म प्रजापतिप्रबन्धपरंपरयाऽऽगत्यास्मास्वनेकधा विप्रसृतमनाद्यनन्तं स्वयंभु ब्रह्म नित्यं तस्मै

---

रभ्य सांजीवीपुत्रपर्यन्तं वाजसनेयिशाखासु सर्वास्वेको वंश इत्याह । समानमिति । प्रवचनाख्यस्य वंशात्मनो ब्रह्मणः संबन्धात्प्रजापतिर्विद्यां लब्धवानित्याह । ब्रह्मण इति । तस्याधिकारिभेदादवान्तरभेदं दर्शयति । तच्चेति । प्रजापतिमुखप्रबन्धः प्रपञ्चः सैव परंपरा तयेति यावत् । तस्य परमात्मरूपं स्वयंभूत्वमभिदधाति । अनादीति । तस्यापौरुषेयत्वेनासंभावितदोषतया प्रामाण्यमभिप्रेत्य विशिनष्टि । नित्यमिति । आदिमध्यान्तेषु कृतमङ्गला ग्रन्थाः प्रचारिणो भवन्तीति मन्वानः सन्नाह । तस्मै

---

१ ग. घ. ज. झ. ढ. °र्यपर्व° । २ क. ख. छ. झ. °णः । ब्र° । ३ घ. ञ. ण. °तिप्रमु° । ४ घ. ञ. ण. °ख्यस्व° । ५ क. ख. ढ. प्रसारि° ।

ब्रह्म स्वयंभु ब्रह्मणे नमः ॥४॥ इति बृहदारण्यकोपनिषदि षष्ठाध्यायस्य पञ्चमं ब्राह्मणम् ॥५॥

इति वाजसनेयके बृहदारण्यकोपनिषदि षष्ठोऽध्यायः॥६॥

इति वाजसनेयकबृहदारण्यकक्रमेणाष्टमोऽध्यायः ॥ ८ ॥

---

ब्रह्मणे नमः । नमस्तदनुवर्तिभ्यो गुरुभ्यः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥

इति बृहदारण्यकोपनिषद्भाष्ये षष्ठाध्यायस्य पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य श्रीशंकरभगवतः कृतौ बृहदारण्यकोपनिषद्भाष्ये षष्ठोऽध्यायः ॥ ६ ॥

---

ब्रह्मणे नम इति ॥ १ ॥ २॥ ३ ॥ ४ ॥ इति बृहदारण्यकोपनिषद्भाष्यटीकायां षष्ठाध्यायस्य पञ्चमं वंशब्राह्मणम् ॥ ५ ॥

नमो जन्मादिसंबन्धहेतुविध्वंसहेतवे ।
हरये परमानन्दपरिज्ञानवपुर्भृते ॥ १ ॥
नमस्त्रय्यन्तसंदोहसरसीरुहभानवे ।
गुरवे परपक्षौघध्वान्तध्वंसपटीयसे ॥ २ ॥

इति श्रीपरमहंसपरिव्राजकशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानकृतायां बृहदारण्यकोपनिषद्भाष्यटीकायां षष्ठोऽध्यायः ॥ ६ ॥

---

१ क. 'बन्धिविघ्नवि' । ख. छ. ढ. 'बन्धिहे' । २ अ. 'न्धबन्धवि' ।

समाप्तेयं सटीकशांकरभाष्योपेता बृहदारण्यकोपनिषत् ।

॥ ॐ तत्सत् ॥

# अथ बृहदारण्यकोपनिषत्कण्डिकाद्यपदानां वर्णानुक्रमः प्रारभ्यते ।

# बृहदारण्यकोपनिषद्विषयसूचीपत्रकम् ।

## प्रथमोऽध्यायः ॥ १ ॥

समाप्तोऽयं वर्णानुक्रमः ।